ष्यवृक्षभेदाः । [illegible] करञ्जश्च करञ्जके इत्यमरः । यस्मिंस्त-स्मिन् । निवेशार्हे इत्यर्थः । [नर्मदारोधसि] नर्मदाया रोधसि रेवायास्तीरे क्लान्तं श्रान्तं [रजोधूसरकेतु] रजोभिर्धूसराः केतवो ध्वजा यस्य तत्सैन्यं निवेशयामास ॥

अथोपरिष्टाद्भ्रमरैर्भ्रमद्भिः प्राक्सूचितान्तःसलिलप्रवेशः ।
निर्धौतदानामलगण्डभित्तिर्वन्यः सरित्तो गज उन्ममज्ज ॥ ४३॥

अथोपरिष्टादूर्ध्वम् । 'उपर्युपरिष्टात्' इति निपातः । भ्रमद्भिः । मदलोभादिति भावः भ्रमरैः प्रागुन्मज्जनात्पूर्वं [सूचितान्तःसलिलप्रवेशः] सूचितो ज्ञापितोऽन्तः सलिले प्रवेशो यस्य स तथोक्तः । [निर्धौतदानामल-गण्डभित्तिः] निर्धौतदाने क्षालितमदे अत एवामले गण्डभित्ती यस्य स तथोक्तः । 'दानं गजमदे त्यागे' इति शाश्वतः । प्रशस्तौ गण्डौ गण्डभित्ती । 'प्रशंसावचनैश्च' इति समासः । भित्तिशब्दः प्रशस्तार्थः । तथा च गणरत्न-महोदधौ—'मतल्लिकोद्घमिश्राः स्युः प्रकाण्डस्थलभित्तयः' इति । भित्तिः प्रदेशो वा । 'भित्तिः प्रदेशे कुड्येऽपि' इति विश्वः । निर्धौतदानेनामला गण्ड-भित्तिर्यस्येति वा । वन्यो गजः सरित्तो नर्मदायाः सकाशात् । पञ्चम्यास्तसि-ल्प्रययः । उन्ममज्जोत्थितः ॥

निःशेषविक्षालितधातुनापि वप्रक्रियामृक्षवतस्तटेषु ।
नीलोर्ध्वरेखाशबलेन शंसन्दन्तद्वयेनाश्मविकुण्ठितेन ॥४४॥

कथंभूतो गजः । निःशेषविक्षालितधातुनापि धौतगैरिकादिनापि । [नीलोर्ध्वरेखाशबलेन] नीलाभिरूर्ध्वाभी रेखाभिस्तटाभिघातजनिताभिः शबलेन कर्बुरेण । 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इत्यमरः । [अश्म-विकुण्ठितेन] अश्मभिः पाषाणैर्विकुण्ठितेन कुण्ठीकृतेन दन्तद्वयेन । [ऋक्ष-वतः] ऋक्षवान्नाम कश्चित्तत्रत्यः पर्वतः । तस्य तटेषु वप्रक्रियां वप्रक्रीडाम् उत्खातकेलिमित्यर्थः । 'उत्खातकेलिः शृङ्गाद्यैर्वप्रक्रीडा निगद्यते' इति शब्दार्णवः शंसन्कथयन् । सूचयन्नित्यर्थः । युग्मम् ॥

संहारविक्षेपलघुक्रियेण हस्तेन तीराभिमुखः सशब्दम् ।
बभौ स भिन्दन्बृहतस्तरंगान्वार्यर्गलाभङ्ग इव प्रवृत्तः ॥४५॥

[संहारविक्षेपलघुक्रियेण] संहारविक्षेपयोः संकोचनप्रसारणयोर्लघु-क्रियेण क्षिप्रव्यापारेण । 'लघु क्षिप्रमरं द्रुतम्' इत्यमरः हस्तेन शुण्डादण्डेन ।

---

१. धावु गतिशुद्ध्योरित्यस्माल्लिट् यां [illegible] विभाषेति [illegible] '[illegible]—' [illegible] । '[illegible]' इति [illegible] ।

'हस्तो नक्षत्रभेदे स्यात्करेभकरयोरपि' इति विश्वः । सशब्दम् सघोषं बृहत-स्तरंगान्भिन्दन्विदारयंस्तीराभिमुखः स गजः । [वार्यर्गलाभङ्गे] वारी गजबन्धनस्थानम् । 'वारी तु गजबन्धनी' इति यादवः । वार्या अर्गलाया विष्क-म्भस्य भङ्गे भञ्जनं प्रवृत्त इव बभौ ॥

शैलोपमः शैवलमञ्जरीणां जालानि कर्षन्नुरसा स पश्चात् ।
पूर्वं तदुत्पीडितवारिराशिः सरित्प्रवाहस्तटमुत्ससर्प ॥४६॥

शैलोपमः स गजः शैवलमञ्जरीणां जालानि वृन्दान्युरसा कर्ष-न्पश्चात्तटमुत्ससर्प । पूर्वं [तदुत्पीडितवारिराशिः] तेन गजेनोत्पीडितो नुन्नो वारिराशिर्यस्य स सरित्प्रवाहस्तटमुत्ससर्प ॥

तस्यैकनागस्य कपोलभित्त्योर्जलावगाहक्षणमात्रशान्ता ।
वन्येतरानेकपदर्शनेन पुनर्दिदीपे मददुर्दिनश्रीः ॥ ४७ ॥

तस्यैकनागस्यैकाकिनो गजस्य कपोलभित्त्योः [जलावगाहक्षण-मात्रशान्ता] जलावगाहेन क्षणमात्रं शान्ता निवृत्ता मददुर्दिनश्रीर्मदवर्षलक्ष्मीः [वन्येतरानेकपदर्शनेन] वन्येतरेषां ग्राम्याणामनेकपानां द्विपानां दर्शनेन पुनर्दिदीपे ववृधे ॥

सप्तच्छदक्षीरकटुप्रवाहमसह्यमाघ्राय मदं तदीयम् ।
विलङ्घिताधोरणतीव्रयत्नाः सेनागजेन्द्रा विमुखा बभूवुः ॥४८॥

[सप्तच्छदक्षीरकटुप्रवाहम्] सप्तच्छदस्य वृक्षविशेषस्य क्षीरवत्कटुः सुरभिः प्रवाहः प्रसारो यस्य तम् । 'कटुतिक्तकषायास्तु सौरभ्येऽपि प्रकीर्तिताः' इति यादवः । असह्यं तदीयं मदमाघ्राय सेनागजेन्द्राः [विलङ्घिता-धोरणतीव्रयत्नाः] विलङ्घितस्तिरस्कृत आधोरणानां हस्तिपकानां तीव्रो महान्यत्नो यैस्ते तथोक्ताः सन्तः । 'आधोरणा हस्तिपका हस्त्यारोहा निषादिनः' इत्यमरः । विमुखाः पराङ्मुखा बभूवुः ॥

स छिन्नबन्धद्रुतयुग्यशून्यम् भग्नाक्षपर्यस्तरथं क्षणेन ।
रामापरित्राणविहस्तयोधं सेनानिवेशं तुमुलं चकार ॥४९॥

स गजः । छिन्ना बन्धा यैस्ते छिन्नबन्धाः द्रुताः पलायिताः युगं वह-न्तीति युग्या वाहा यस्मिन्सः । स चासौ शून्यश्च तम् । [छिन्नबन्धद्रुतयुग्य-शून्यम्] भग्ना अक्षा रथावयवदारुविशेषाः । 'अक्षो रथस्यावयवे पाशकेऽप्यक्ष-[illegible]' इति शाश्वतः । येषां ते भग्नाक्षा अत एव पर्यस्ताः पतिता रथा-

१. '[illegible]' [illegible] स्त्रियां प्रयोगः ।

२. आधोरणमर्हन्तीत्याधोरणाः । [illegible] ।

यस्मिंस्तम् [भग्नाक्षपर्यस्तरथम्] [रामापरित्राणविहस्तयोधम्] रामाणां स्त्रीणां परित्राणे संरक्षणे विहस्ता व्याकुलाः। 'विहस्तव्याकुलौ समौ' इत्यमरः। योधा यस्मिंस्तं सेनानिवेशं शिबिरम् क्षणेन तुमुलं संकुलं चकार॥

तमापतन्तं नृपतेरवध्यो वन्यः करीति श्रुतवान्कुमारः[1]।
निवर्तयिष्यन्विशिखेन कुम्भे जघान नात्यायतकृष्टशार्ङ्गः॥५०॥

नृपते राज्ञो वन्यः करी अवध्य इति श्रुतवाञ्छास्त्राज्ज्ञातवान्कुमार आपतन्तमभिधावन्तं तं गजं निवर्तयिष्यन्न तु प्रहरिष्यन्। अत एव [नात्यायतकृष्टशार्ङ्गः] नात्यायतमनतिदीर्घं यथा स्यात्। नञर्थस्य नशब्दस्य सुप्सुपेति समासः। कृष्टशार्ङ्ग ईषदाकृष्टचापः सन्विशिखेन बाणेन कुम्भे जघान। अत्र चाक्षुषः—'लक्ष्मीकामो युद्धादन्यत्र करिवधं न कुर्यात्। इयं हि श्रीर्यैं करिणः' इति। अत एव 'युद्धादन्यत्र' इति द्योतनार्थमेव वन्यग्रहणं कृतम्॥

स विद्धमात्रः किल नागरूपमुत्सृज्य तद्विस्मितसैन्यदृष्टः।
स्फुरत्प्रभामण्डलमध्यवर्ति कान्तं वपुर्व्योमचरं प्रपेदे॥५१॥

स गजो विद्धमात्रस्ताडितमात्रः किल न तु प्रहृतस्तथापि नागरूपं गजशरीरमुत्सृज्य। [तद्विस्मितसैन्यदृष्टः] तेन वृत्तान्तेन विस्मितैस्तद्विस्मितैः सैन्यैर्दृष्टः सन्। [स्फुरत्प्रभामण्डलमध्यवर्ति] स्फुरतः प्रभामण्डलस्य मध्यवर्ति कान्तम् मनोहरम् व्योमचरं वपुः प्रपेदे प्राप॥

अथ प्रभावोपनतैः कुमारं कल्पद्रुमोत्थैरवकीर्य पुष्पैः।
उवाच वाग्मी दशनप्रभाभिः संवर्धितोरःस्थलतारहारः॥५२॥

अथ [प्रभावोपनतैः] प्रभावेनोपनतैः प्राप्तैः कल्पद्रुमोत्थैः कल्पवृक्षोत्पन्नैः पुष्पैः कुमारमजमवकीर्याभिवृष्य दशनप्रभाभिर्दन्तकान्तिभिः [संवर्धितोरःस्थलतारहारः] संवर्धिता उरःस्थले ये तारहाराः स्थूला मुक्ताहारास्ते येन स तथोक्तः वाचोऽस्य सन्तीति वाग्मी वक्ता। 'वाचो ग्मिनि' प्रत्ययः स पुरुष उवाच॥

---

१. कुत्सितो मारो मदनोऽस्येति कुमारः।
२. शिशेरते [illegible] शिबिरः।

मतङ्गशापादवलेपमूलादवाप्तवानस्मि मतङ्गजत्वम्।
अवेहि गन्धर्वपतेस्तनूजं प्रियंवदं मां प्रियदर्शनस्य ॥५३॥

अवलेपमूलाद्गर्वहेतुकात्। 'अवलेपस्तु गर्वे स्याल्लेपने दूषणेऽपि च' इति विश्वः। [मतङ्गशापात्] मतङ्गस्य मुनेः शापान्मतङ्गजत्वमवाप्तवानस्मि। मां प्रियदर्शनस्य प्रियदर्शनाख्यस्य गन्धर्वपतेर्गन्धर्वराजस्य तनूजम् पुत्रम्। 'स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः। 'तन्वादेर्वा' इत्यूङिति केचित्। प्रियंवदं प्रियंवदाख्यमवेहि जानीहि। प्रियं वदतीति प्रियंवदः। 'प्रियवशे वदः खच्' इति खच्प्रत्ययः॥

स चानुनीतः प्रणतेन पश्चान्मया महर्षिर्मृदुतामगच्छत्।
उष्णत्वमग्न्यातपसंप्रयोगाच्छैत्यं हि यत्सा प्रकृतिर्जलस्य ॥५४॥

स महर्षिश्च प्रणतेन मयानुनीतः सन्पश्चान्मृदुतां शान्तिमगच्छत्। तथाहि। जलस्योष्णत्वं [अग्न्यातपसंयोगात्] अग्नेरातपस्य वा संप्रयोगात्संपर्कात्। न तु प्रकृत्योष्णत्वम् यच्छैत्यं सा प्रकृतिः स्वभावः विधेयप्राधान्यात्सेति स्त्रीलिङ्गनिर्देशः। महर्षीणां शान्तिरेव स्वभावो न क्रोध इत्यर्थः॥

इक्ष्वाकुवंशप्रभवो यदा ते भेत्स्यत्यजः कुम्भमयोमुखेन।
संयोक्ष्यसे स्वेन वपुर्महिम्ना तदेत्यवोचत्स तपोनिधिर्माम् ॥५५॥

[इक्ष्वाकुवंशप्रभवः] इक्ष्वाकुवंशः प्रभवो यस्य सोऽजो यदा ते कुम्भमयोमुखेन लोहाग्रेण शरेण भेत्स्यति विदारयिष्यति तदा स्वेन [वपुर्महिम्ना] वपुषो महिम्ना पुनः संयोक्ष्यसे संगंस्यस इति स तपोनिधिर्मामवोचत्॥

संमोचितः सत्त्ववता त्वयाहं शापाच्चिरप्रार्थितदर्शनेन।
प्रतिप्रियं चेद्भवतो न कुर्यां वृथा हि मे स्यात्स्वपदोपलब्धिः ॥५६॥

[चिरप्रार्थितदर्शनेन] चिरं प्रार्थितं दर्शनं यस्य तेन सत्त्ववता बलवता त्वयाहं शापात्संमोचितो मोक्षं प्रापितः। भवतः प्रतिप्रियं प्रत्यु-

१. मतङ्गाज्जात इति। 'इन्चम्यामजातौ' इति जनेर्डः। वाचस्पत्येऽयं शब्दोऽन्यथा निरुक्तः—मतङ्गे मेघ इव जायते इति मतङ्गजस्तस्य तदाकारत्वात्' इति॥

२. शाप आक्रोशः।

पकारम् न कुर्यां चेन्मे स्वपदोपलब्धिः स्वस्थानप्राप्तिः । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । वृथा स्याद्धि । तदुक्तम्—'प्रतिकर्तुमशक्तस्य जीवितान्मरणं वरम्' इति ॥

संमोहनं नाम सखे ममास्त्रं प्रयोगसंहारविभक्तमन्त्रम् ।
गान्धर्वमादत्स्व यतः प्रयोक्तुर्न चारिहिंसा विजयश्च हस्ते ॥५७॥

हे सखे ! सखिशब्देन समप्राणतोक्ता । यथोक्तम्—'अत्यागसहनो बन्धुः सदैवानुमतः सुहृत् । एकक्रियं भवेन्मित्रं समप्राणः सखा मतः ॥' इति । [प्रयोगसंहारविभक्तमन्त्रम्] प्रयोगसंहारयोर्विभक्तमन्त्रं गान्धर्वं गन्धर्वदेवताकम् । संमोह्यतेऽनेनेति संमोहनं नाम ममास्त्रमादत्स्व गृहाण । यतोऽस्त्रात्प्रयोक्तुरस्त्रप्रयोगिणोऽरिहिंसा न च विजयश्च हस्ते । हस्तगतो विजयो भवतीत्यर्थः ॥

बलजितः कथमस्त्रग्रहणपरः स्यामिति चेत्तत्राह—

अलं ह्रिया मां प्रति यन्मुहूर्तं दयापरोऽभूः प्रहरन्नपि त्वम् ।
तस्मादुपच्छन्दयति प्रयोज्यं मयि त्वया न प्रतिषेधरौक्ष्यम्॥५८॥

किं च मां प्रति ह्रिया प्रहारनिमित्तयालम् । कुतः । यद्यतो हेतोस्त्वं मां प्रहरन्नपि मुहूर्तं दयापरः कृपालुरभूः । तस्मादुपच्छन्दयति प्रार्थयमाने मयि त्वया । [प्रतिषेधरौक्ष्यम्] प्रतिषेधः परिहारः स एव रौक्ष्यम् पारुष्यम् । तन्न प्रयोज्यं न कर्तव्यम् ॥

तथेत्युपस्पृश्य पयः पवित्रं सोमोद्भवायाः सरितो नृसोमः ।
उदङ्मुखः सोऽस्त्रविदस्त्रमन्त्रं जग्राह तस्मान्निगृहीतशापात्॥५९॥

ना सोमश्चन्द्र इव नृसोमः । उपमितसमासः । 'सोम ओषधिचन्द्रयोः' इति शाश्वतः । पुरुषश्रेष्ठ इत्यर्थः । अस्त्रविदस्त्रज्ञः सोऽजस्तथेति सोम उद्भवो यस्याः सा तस्याः सोमोद्भवायाः सरितो नर्मदायाः । 'रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका' इत्यमरः । पवित्रम् पय उपस्पृश्य पीत्वा । आचम्येत्यर्थः । उदङ्मुखः सन्निगृहीतशापान्निवर्तितशापात् । उपकृतादित्यर्थः । तस्मात्प्रियंवदादस्त्रमन्त्रं जग्राह ॥

---

१. द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इत्यमरः 'सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः । आत्मत्वव्यवसायासुवित्तेष्वस्त्री तु जन्तुषु ॥' इति मेदिनी ।



२. 'गुणवचनब्राह्मणादिभ्यः—' इति भावे ष्यञ् । रूक्षस्य भावो रौक्ष्यम् ।

एवं तयोरध्वनि दैवयोगादासेदुषोः सख्यमचिन्त्यहेतु।
एको ययौ चैत्ररथप्रदेशान्सौराज्यरम्यानपरो विदर्भान् ॥६०॥

एवमध्वनि मार्गे दैवयोगाद्दैववशादचिन्त्यहेत्वनिर्धार्यहेतुकं सख्यं सखित्वम्। 'सख्युर्यः' इति यप्रत्ययः। आसेदुषोः प्राप्तवतोस्तयोर्मध्य एको गन्धर्वः [चैत्ररथप्रदेशान्] चैत्ररथस्य कुबेरोद्यानस्य प्रदेशान्। 'अस्योद्यानं चैत्ररथम्' इत्यमरः। अपरोऽजः [सौराज्यरम्यान्] सौराज्येन राजन्वत्तया रम्यान्विदर्भान्विदर्भदेशान्ययौ॥

तं तस्थिवांसं नगरोपकण्ठे तदागमारूढगुरुप्रहर्षः।
प्रत्युज्जगाम क्रथकैशिकेन्द्रश्चन्द्रं प्रवृद्धोर्मिरिवोर्मिमाली॥६१॥

[नगरोपकण्ठे] नगरस्योपकण्ठे समीपे तस्थिवांसं स्थितं तमजं [तदागमारूढगुरुप्रहर्षः] तस्याजस्यागमेनागमनेनारूढ उत्पन्नो गुरुः प्रहर्षो यस्य स क्रथकैशिकेन्द्रो विदर्भराजः। प्रवृद्धोर्मिरूर्मिमाली समुद्रश्चन्द्रमिव। प्रत्युज्जगाम॥

प्रवेश्य चैनं पुरमग्रयायी नीचैस्तथोपाचरदर्पितश्रीः।
मेने यथा तत्र जनः समेतो वैदर्भमागन्तुमजं गृहेशम्॥६२॥

एनमजमग्रयायी। सेवाधर्मेण पुरोगच्छन्नित्यर्थः। नीचैर्नम्रः पुरम् प्रवेश्य प्रवेशं कारयित्वा प्रीत्यार्पितश्रीस्तथा तेन प्रकारेणोपाचरदुपचरितवान् यथा येन प्रकारेण तत्र पुरे समेतो मिलितो जनो वैदर्भं भोजमागन्तुम् प्राघूर्णिकं मेने अजं गृहेशं गृहपतिं मेने॥

तस्याधिकारपुरुषैः प्रणतैः प्रदिष्टां
प्राग्द्वारवेदिविनिवेशितपूर्णकुम्भाम्।
रम्यां रघुप्रतिनिधिः स नवोपकार्यां
बाल्यात्परामिव दशां मदनोऽध्युवास॥६३॥

---

१. 'भाषायां सदवसश्रुवः' इति लिटः क्वसुरादेशः।

२. शोभनो राजा येषां ते सुराजानः, तेषां भावः सौराज्यम्।

३. ऊर्मीणां मालास्यास्तीति ऊर्मिमाली। व्रीह्यादित्वाद् इनिः।

४. 'प्राग्द्वारं यस्याः सा प्राग्द्वारा। सा चासौ वेदिश्च। तत्र निवेशितो हेम्नः कुम्भो यस्याः सा' इति दिनकरः।



५. उपक्रियत इति। कृदलीण्यत्।

रघुप्रतिनिधी रघुकल्पः । रघुतुल्य इत्यर्थः । उक्तं च दण्डिना सादृश्य-
वाचकप्रस्तावे--'कल्पदेशीयदेश्यादि प्रख्यप्रतिनिधी अपि' इति । सोऽजः प्रणतै-
र्नमस्कृतवद्भिः । कर्तरि क्तः तस्य [अधिकारपुरुषैः] भोजस्याधिकारो नि-
योगस्तस्य पुरुषैः । अधिकृतैरित्यर्थः । प्रदिष्टां निर्दिष्टां [प्राग्द्वारवेदिविनि-
वेशितपूर्णकुम्भां] प्राग्द्वारस्य वेद्यां विनिवेशितः प्रतिष्ठापितः पूर्णकुम्भो यस्या-
स्तां । स्थापितमङ्गलकलशामित्यर्थः । रम्यां रमणीयां नवोपकार्यां नूतनं राज-
भवनं । 'उपकार्या राजसद्मन्युपचारोचितेऽन्यवत्' इति विश्वः । मदनो बाल्या-
त्परां शैशवादनन्तरां दशामिव । यौवनमिवेत्यर्थः । अध्युवासाधिष्ठितवान् ।
तत्रोषितवानित्यर्थः । 'उपान्वध्याङ्वसः' इति कर्मत्वम् ॥

तत्र स्वयंवरसमाहृतराजलोकं
कन्याललाम कमनीयमजस्य लिप्सोः ।
भावावबोधकलुषा दयितेव रात्रौ
निद्रा चिरेण नयनाभिमुखी बभूव ॥ ६४ ॥

तत्रोपकार्यायां । [स्वयंवरसमाहृतराजलोकम्] स्वयंवरनिमित्तं
संमेलितो राजलोको येन तत्कमनीयं स्पृहणीयं कन्याललाम कन्यासु श्रेष्ठं ।
'ललामोऽस्त्री ललामापि प्रभावे पुरुषे ध्वजे । श्रेष्ठभूषाशुण्डशृङ्गपुच्छचिह्नश्वलि-
ङ्गिषु ॥' इति यादवः । लिप्सोर्लब्धुमिच्छोः । लभेः सन्नन्तादुप्रत्ययः अजस्य
[भावावबोधकलुषा] भावावबोधे पुरुषस्याभिप्रायपरिज्ञाने कलुषासमर्था
दयितेव रात्रौ निद्रा चिरेण नयनाभिमुखी बभूव । 'राजानं कामिनं
चौरम् प्रविशन्ति प्रजागराः' इति भावः । अभिमुखीशब्दो ङीषन्तश्च्व्यन्तो वा ॥

तं कर्णभूषणनिपीडितपीवरांसं
शय्योत्तरच्छदविमर्दकृशाङ्गरागम् ।
सूतात्मजाः सवयसः प्रथितप्रबोधम्
प्राबोधयन्नुषसि वाग्भिरुदारवाचः ॥ ६५ ॥

[कर्णभूषणनिपीडितपीवरांसम्] कर्णभूषणाभ्यां निपीडितौ पीवरौ
पीनावंसौ यस्य तम् । [शय्योत्तरच्छदविमर्दकृशाङ्गरागम्] शय्याया उत्त-
रच्छदस्योपर्यास्तरणवस्त्रस्य विमर्दैन घर्षणेन कृशो विमलोऽङ्गरागो यस्य तम् । न

१. स्वयं वरणम् स्वयंवरः । 'ग्रहवृदृनिश्चिगमश्च' इत्यप् ।

२. स्वप्राणनाथस्यान्यत्र योषिति संक्रान्तचित्तत्वाद्विमना इति केचिद्
व्याचक्षते' तत्प्रस्तुते न सङ्गच्छते ।

त्वङ्गनासङ्गादिति भावः। प्रार्थितप्रबोधं प्रकृष्टज्ञानं तमेनमजं सवयसः समानवयस्का उदारवाचः प्रगल्भगिरः सूतात्मजा बन्दिपुत्राः। 'वैतालिक' इति वा पाठः। 'वैतालिका बोधकराः' इत्यमरः। वाग्भिः स्तुतिपाठैरुषसि प्राबोधयन्प्रबोधयामासुः॥

रात्रिर्गता मतिमतां वर मुञ्च शय्यां
धात्रा द्विधैव ननु धूर्जगतो विभक्ता।
तामेकतस्तव बिभर्ति गुरुर्विनिद्र-
स्तस्या भवानपरधुर्यपदावलम्बी॥ ६६॥

हे मतिमतां वर। निर्धारणे षष्ठी। रात्रिर्गता। शय्यां मुञ्च। विनिद्रो भवेत्यर्थः। विनिद्रत्वे फलमाह—धात्रेति। धात्रा ब्रह्मणा जगतो धूर्भारः। 'धूः स्याद्यानमुखे भारे' इति यादवः। द्विधैव। द्वयोरेवेत्यर्थः। एवकारस्तृतीयनिषेधार्थः। विभक्ता ननु विभज्य स्थापिता खलु। तत्किमत आह—तां धुरमेकत एककोटौ तव गुरुः पिता विनिद्रः सन्बिभर्ति। तस्या धुरो भवान्। [ अपरधुर्यपदावलम्बी ] धुरं वहतीति धुर्यो भारवाही। तस्य पदं वहनस्थानम्। अपरं यद्धुर्यपदं तदवलम्बी। ततो विनिद्रो भवेत्यर्थः। न ह्युभयवाह्यमेको वहतीति भावः॥

निद्रावशेन भवताप्यनवेक्षमाणा
पर्युत्सुकत्वमबला निशि खण्डितेव।
लक्ष्मीर्विनोदयति येन दिगन्तलम्बी
सोऽपि त्वदाननरुचिं विजहाति चन्द्रः॥ ६७॥

चन्द्रारविन्दराजवदनादयो लक्ष्मीनिवासस्थानानीति प्रसिद्धमाश्रित्योच्यते। निद्रावशेन निद्राधीनेन। स्त्र्यन्तरासङ्गोऽत्र ध्वन्यते। भवता पर्युत्सुकत्वमपि। त्वय्यनुरक्तत्वमपीत्यर्थः। 'प्रसितोत्सुकाभ्यां तृतीया च' इति सप्तम्यर्थे तृतीया। अपिशब्दस्तद्विषयानुरागस्यानपेक्ष्यत्वद्योतनार्थः। निशि खण्डिता भर्तुरन्यासङ्गज्ञानकलुषिताबलेव नायिकेव। 'ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता' इति दशरूपके। अनवेक्षमाणाविचारयन्ती सती। उपेक्ष्यमाणेत्यर्थः। 'ह्यनवेक्ष्यमाणा' इति पाठे निद्रावशेन भवतानवेक्ष्यमाणाऽनिरीक्ष्यमाणा।

१. निद्राकषायमुकुलीकृतताम्रनेत्रः नारीनखव्रणविशेषविचित्रिताङ्गः।
यस्याः कुतोपि गृहमेति पतिः प्रभाते सा खण्डितेति कथिता कविभिः पुराणैः॥

कर्मणि शानच् । लक्ष्मीः प्रयोजककर्त्री येन प्रयोज्येन चन्द्रेण पर्युत्सुकत्वं त्वद्विरहवेदनाम् । 'कालाक्षमत्वमौत्सुक्यं मनस्तापज्वरादिकृत्' इत्यलंकारे । विनोदयति निराकरयतीति योजना । शेषं पूर्ववत् । नाथस्त्वर्थोपपत्तिमपश्यन्निमं पक्षमुपेक्षिष्ट । लक्ष्मीर्येन चन्द्रेण सह । त्वदाननसदृशत्वादिति भावः । विनोदयति विनोदं करोति । विनोदशब्दात् 'तत्करोति तदाचष्टे' इति णिच्प्रत्ययः । सादृश्यदर्शनादयो हि विरहिणां विनोदस्थानानीति भावः । स चन्द्रोऽपि दिगन्तलम्बी पश्चिमाशां गतः सन् । अस्तं गच्छन्नित्यर्थः । अत एव त्वदाननरुचिं विजहाति । त्वन्मुखसादृश्यं त्यजतीत्यर्थः । अतो निद्रां विहाय तां लक्ष्मीमनन्यशरणां परिगृहाणेति भावः ॥

तद्वल्गुना युगपदुन्मिषितेन ताव-
त्सद्यः परस्परतुलामधिरोहतां द्वे ।
प्रस्पन्दमानपरुषेतरतारमन्त-
श्चक्षुस्तव प्रचलितभ्रमरं च पद्मम् ॥ ६८ ॥

तत्तस्माल्लक्ष्मीपरिग्रहणाद्वल्गुना मनोज्ञेन । 'वल्गु स्थाने मनोज्ञे च वल्गु भाषितमन्यवत्' इति विश्वः युगपत्तावदुन्मिषितेन युगपदेवोन्मीलितेन सद्यो द्वे अपि परस्परतुलामन्योन्यसादृश्यमधिरोहतां प्राप्नुताम् । प्रार्थनायां लोट् । के द्वे [अन्तःप्रस्पन्दमानपरुषेतरतारम्] अन्तः प्रस्पन्दमाना चलन्ती परुषेतरा स्निग्धा तारा कनीनिका यस्य तत्तथोक्तम् । 'तारकाक्ष्णः कनीनिका' इत्यमरः तव चक्षुः अन्तःप्रचलितभ्रमरं चलद्भृङ्गं पद्मं च युगपदुन्मेषे सति सम्पूर्णसादृश्यलाभ इति भावः ॥

वृन्ताच्छ्लथं हरति पुष्पमनोकहानां
संसृज्यते सरसिजैररुणांशुभिन्नैः ।
स्वाभाविकम् परगुणेन विभातवायुः
सौरभ्यमीप्सुरिव ते मुखमारुतस्य ॥ ६९ ॥

विभातवायुः प्रभातवायुः स्वाभाविकं नैसर्गिकं ते तव मुखमारुतस्य निःश्वासपवनस्य सौरभ्यम् । तादृक्सौगन्ध्यमित्यर्थः । परगुणेनान्यदीयगुणेन । सांक्रामिकगन्धेनेत्यर्थः । ईप्सुराप्तुमिच्छुरिव । 'आप्ज्ञप्यृधामीत्'

१. 'कर्तृकर्मणोः कृति' इति प्राप्ता षष्ठी न लोकाव्ययेति निषिद्ध्यते । तस्यां निषिद्धायामनुक्ते कर्मणि द्वितीयैव भवति । सौरभ्यमिति ।

इतीकारादेशः । अनोकहानां वृक्षाणां श्लथं शिथिलम् पुष्पं वृन्तात्पुष्पबन्धनात् । 'वृन्तम् प्रसवबन्धनम्' इत्यमरः । हरत्यादत्ते । अरुणांशुभिन्नैस्तरणिकिरणोद्बोधितैः [सरसिजैः] सरसि जातैः सरसिजैः कमलैः सह । 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक् । संसृज्यते संगच्छते । सृजेर्दैवादिकात्कर्तरि लट् ॥

ताम्रोदरेषु पतितं तरुपल्लवेषु
निर्धौतहारगुलिकाविशदं हिमाम्भः ।
आभाति लब्धपरभागतयाधरोष्ठे[1]
लीलास्मितं सदशनार्चिरिव त्वदीयम् ॥ ७० ॥

ताम्रोदरेष्वरुणाभ्यन्तरेषु तरुपल्लवेषु पतितम् [निर्धौतहारगुलिकाविशदम्] निर्धौता या हारगुलिका मुक्तामणयस्तद्वद्विशदं हिमाम्भो लब्धपरभागतया लब्धोत्कर्षतया । 'परभागो गुणोत्कर्षः' इति यादवः । अधरोष्ठे त्वदीयं सदशनार्चिर्दन्तकान्तिसहितं लीलास्मितमिवाभाति ।

यावत्प्रतापनिधिराक्रमते न भानु-
रह्नाय तावदरुणेन तमो निरस्तम् ।
आयोधनाग्रसरतां त्वयि वीर याते
किं वा रिपूंस्तव गुरुः स्वयमुच्छिनत्ति ॥ ७१ ॥

प्रतापनिधिस्तेजोनिधिर्भानुर्यावन्नाक्रमते नोद्गच्छति । 'आङ उद्गमने इत्यात्मनेपदम् । तावत् । भानावनुदित एवेत्यर्थः । अह्नाय झटिति । 'द्राग्झटित्यञ्जसाह्नाय' इत्यमरः । अरुणेनानूरुणा । 'सूर्यसूतोऽरुणोऽनूरुः' इत्यमरः । तमो निरस्तं तथाहि । हे वीर, त्वय्यायोधनेषु युद्धेषु । 'युद्धमायोधनं जन्यम्' इत्यमरः । अग्रसरतां पुरःसरतां याते सति तव गुरुः पिता रिपून्स्वयमुच्छिनत्ति किं वा । नोच्छिनत्त्येवेत्यर्थः । न खलु योग्यपुत्रन्यस्तभाराणां स्वामिनां स्वयं व्यापारखेद इति भावः ॥

---

१. अधरोष्ठ इत्यत्र 'ओत्वोष्ठयोः समासे वा' इति पररूपमेकादेशः ।

२. अत्र केचिदाहुः—'पुरोऽग्रतोऽग्रेषु सर्तेः' इत्यत्र टप्रत्ययविधौ अग्रोपपदस्य एकारान्तत्वं निपात्यते । अतोऽग्रसरताम् इति प्रयोगश्चिन्त्यः ।

३. ज्योतिरुद्गमन इति वक्तव्याद् 'आक्रामति धूमो हर्म्यतलात्' इत्यत्रात्मनेपदं न ।

शय्यां जहत्युभयपक्षविनीतनिद्राः
स्तम्बेरमा मुखरशृङ्खलकर्षिणस्ते ।
येषां विभान्ति तरुणारुणरागयोगा-
द्भिन्नाद्रिगैरिकतटा इव दन्तकोशाः ॥ ७२ ॥

उभाभ्यां पक्षाभ्यां पार्श्वाभ्यां विनीतापगता निद्रा येषां त उभयपक्षविनीतनिद्राः । अत्र समासविषय उभशब्दस्थान उभयशब्दप्रयोग एव साधुरित्यनुसन्धेयं यथाह कैयटः—'उभादुदात्तो नित्यमिति नित्यग्रहणस्येदम् प्रयोजनं वृत्तिविषय उभशब्दस्य प्रयोगो मा भूत् । उभयशब्दस्यैव यथा स्यात् । उभयपुत्र इत्यादि भवति' इति। [मुखरशृङ्खलकर्षिणः] मुखराण्युत्थानचलनाच्छब्दायमानानि शृङ्खलानि निगडानि कर्षन्तीति तथोक्तास्त एव स्तम्बे रमन्त इति स्तम्बेरमा हस्तिनः । 'स्तम्बकर्णयो रमिजपोः' इत्यचप्रत्ययः 'हस्तिसूचकयोः' इति वक्तव्यात् । 'इभः स्तम्बेरमः पद्मी' इत्यमरः । 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक् । शय्यां जहति त्यजन्ति । येषां स्तम्बेरमाणाम् । दन्ताः कोशा इव दन्तकोशाः । दन्तकुड्मलास्तरुणारुणरागयोगाद्बालार्कारुणसम्पर्काद्धेतोर्भिन्नाद्रिगैरिकतटा इव विभान्ति । धातुरक्ता इव भान्तीत्यर्थः॥

दीर्घेष्वमी नियमिताः पटमण्डपेषु
निद्रां विहाय वनजाक्ष वनायुदेश्याः ।
वक्त्रोष्मणा मलिनयन्ति पुरोगतानि
लेह्यानि सैन्धवशिलाशकलानि वाहाः ॥ ७३ ॥

हे वनजाक्ष नीरजाक्ष, 'वनं नीरं वनं सत्त्वम्' इति शाश्वतः । दीर्घेषु पटमण्डपेषु नियमिता बद्धा वनायुदेश्या वनायुदेशे भवाः 'पारसीका वनायुजाः' इति हलायुधः अमी वाहा अश्वा निद्रां विहाय पुरोगतानि लेह्यान्यास्वाद्यानि सैन्धवशिलाशकलानि। 'सैन्धवोऽस्त्री शीतशिवं माणिमन्थं च सिन्धुजे' इत्यमरः । वक्त्रोष्मणा मलिनयन्ति मलिनानि कुर्वन्ति । उक्तं च सिद्धयोगसंग्रहे—'पूर्वाह्णकाले चाश्वानां प्रायशो लवणं हितम् । शूलमोहविबन्धघ्नं लवणं सैन्धवं वरम् इत्यादि ॥

---

१. 'खमुखकुञ्जेभ्यो रः' इति मत्वर्थीयो रः । अत्रमुखशब्दो वचनपर इति भानुजदीक्षितः ।

२. 'जीवनं भुवनं वनम्' इति जलनामस्वमरः । वने जले जायत इति वनजं कमलम् । सप्तम्यां जनेर्डः इति डः । वनजे कमल इवाक्षिणी यस्य स वनजाक्षः । बहुव्रीहौ 'सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षच्समासान्तः

भवति विरलभक्तिर्म्लानपुष्पोपहारः
स्वकिरणपरिवेषोद्भेदशून्याः प्रदीपाः ।
अयमपि च चिरं नस्त्वत्प्रबोधप्रयुक्ता-
मनुवदति शुकस्ते मञ्जुवाक्पञ्जरस्थः ॥ ७४ ॥

[म्लानपुष्पोपहारः] म्लानः पुष्पोपहारः पुष्पपूजा म्लानत्वादेव विरल-भक्तिविरलरचना भवति । प्रदीपाश्च [स्वकिरणपरिवेषोद्भेदशून्याः] स्वकिरणानां परिवेषस्य मण्डलस्योद्भेदेन स्फुरणेन शून्या भवन्ति । निस्तेजस्का भवन्तीत्यर्थः । अपि चायम् मञ्जुवाङ्मधुरवचनः पञ्जरस्थस्ते तव शुक-स्त्वत्प्रबोधनिमित्ते प्रयुक्तामुच्चारितां नोऽस्मकं गिरं वाणीमनुवदति । अनुकृत्य वदतीत्यर्थः । इत्थं प्रभातलिङ्गानि वर्तन्ते । अतः प्रबोद्धव्यमिति भावः ॥

इति विरचितवाग्भिर्वन्दिपुत्रैः कुमारः
सपदि विगतनिद्रस्तल्पमुज्झाञ्चकार ।
मदपटुनिनदद्भिर्बोधितो राजहंसैः
सुरगज इव गाङ्गं सैकतं सुप्रतीकः ॥ ७५ ॥

इतीत्थं विरचितवाग्भिर्वन्दिपुत्रैर्वैतालिकैः । पुत्रग्रहणं समानवय-स्कत्वद्योतनार्थम् । सपदि विगतनिद्रः कुमारः तल्पं शय्याम् । 'तल्पं शय्याट्टदारेषु' इत्यमरः । उज्झांचकार विससर्ज । 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम्प्रत्ययः । कथमिव । [मदपटुनिनद्भिः] मदेन पटु मधुरं निनदद्भी राजहंसैर्बोधितः । सुरगज ईशानदिग्गजः । गङ्गाया इदं गाङ्गम् । सैकतं पुलिनमिव । 'तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम्' इत्यमरः । 'सिकताशर्क-राभ्यां च' इत्यण्प्रत्ययः । सुप्रतीकग्रहणं प्रायशः कैलासवासिनस्तस्य नित्यं गङ्गा-तटविहारसंभवादित्यनुसंधेयम् ॥

---

१. 'परिवेषस्तु परिधिरुपसूर्यकमण्डले' इत्यमरः ।

२. वन्दिनां पुत्रैः । 'वदि अभिवादनस्तुत्योः' इत्यस्माद्दावश्यके णिनिः ।

अथ विधिमवसाय्य शास्त्रदृष्टं दिवसमुखोचितमञ्चिताक्षिपक्ष्मा।
कुशलविरचितानुकूलवेषः क्षितिपसमाजमगात्स्वयंवरस्थम् ॥७६॥

अथोत्थानानन्तरमञ्चितानि चारूण्यक्षिपक्ष्माणि यस्य सः [अञ्चिताक्षिपक्ष्मा] अजः शास्त्रे दृष्टमवगतं दिवसमुखोचितम् प्रातःकालोचितं विधिमनुष्ठानमवसाय्य समाप्य। स्यतेर्ण्यन्ताल्ल्यप्। [कुशलविरचितानुकूलवेषः] कुशलैः प्रसाधनदक्षैर्विरचितोऽनुकूलः स्वयंवरोचितो वेषो नेपथ्यं यस्य स तथोक्तः सन्स्वयंवरस्थं क्षितिपसमाजं राजसमूहमगादगमत्। 'इणो गा लुङि' इति गादेशः। पुष्पिताग्रावृत्तमेतत्। तल्लक्षणं—'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' ॥ इति ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये अजस्वयंवराभिगमनो नाम पञ्चमः सर्गः ॥

---

१. अञ्चित इत्यस्य निष्पत्तिप्रकाराय 'अञ्चिताभ्यां तपोवनावृत्तिपथं गताभ्याम्' इत्यत्रास्मदीयं टिप्पणमवलोकनीयम्।

२. सम्पूर्वाद्गत्यर्थादजतेर्घञ्। 'अजेर्व्यघञपोः' इति 'विः' इत्यादेशो न भवति। मनुष्यसमूहेऽयं शब्दः प्रयुज्यते, आर्यसमाज इति यथा। पश्वादिसमूहे तु 'समुदोरजः पशुषु' इत्यपि प्रत्यये 'समजः' इति भवति ॥

इति पञ्चमसर्गस्य विषमपदविमर्शिनी टिप्पणी।

शुभम्भूयादध्यापकानामध्येतॄणां च ॥

—:*:—

# Translation.

## Canto I.

1. For the understanding of words and their meanings, I salute Parvati and Parmeshvara, parents of the world, who are united like words and their meanings.

What a disparity there is between the race sprung from the sun and my intellect of a limited scope! Out of folly, I seek to cross, by means of a raft, the ocean so difficult to be crossed.

3. Dull of intellect and (yet) ambitious of a poet's renown, I shall be an object of ridicule, like a dwarf with hands uplifted out of greed for a fruit which can be reached by a tall person (only).

4 Or I have an access to this family whereto a door in the form of description has been made by the former poets, just as a thread finds passage through a gem bored by a diamond-pin.

5. (I, who am such, shall describe) the family of the Raghus who were pure ever since their birth, whose activities continued till their fruition, who were the lords of the earth up to the ocean and the track of whose chariots lay up to the heaven.

6. Who worshipped fire according to the shastric injunctions, who satisfied (lit. respected) the supplicants according to their desires, who dealt out punishment proportionately to the offence and who woke at the proper time.

7. Who amassed riches for giving them away, who spoke measured words for the sake of truth, who were ambitious of conquest for the sake of fame and who were house-holders for the sake of progeny.

8. Who diligently acquired knowledge in boyhood, who sought pleasures in youth, who lived as hermits in old age and who, in the end, quitted their bodies through meditation.

9. I, who am such, shall describe the family of the Raghus, although I have a scanty power of expression, impelled as I am to this act of rashness, by their virtues coming to my ears.



10. It becomes the learned who are the source of distinction between good and bad, to listen to this (description). For it is in fire (alone) that the purity or mixture of gold is tested.

11. There was Manu, son of Vivasvat (the sun), who was honoured by the wise and who was the first of kings, as (the syllable) 'Om' is that of the Vedas.

12. In that pure line was born the purer Dalipa, the moon among kings, as the purer moon is born from the pure milky ocean.

13. He had a broad chest and stout shoulders (lit. like those of a bull), and was tall like the Sala tree and long-armed. Thus he looked like the military valour which had taken on a body fitted for (the performance of) its deeds.

14. He stood like the mountain Meru, having occupied (subjugated) the earth, with his body which surpassed all beings in might,. outshone all in radiance and was the most majestic De. of all.

15. He had an intelligence corresponding to his form, was possessed of the Shastric lores corresponding to his intelligence, acted according to the Shastric lores and enjoyed success according to his actions.

16. On account of his awe-inspiring qualities, he was not to be slighted by his dependents and for his gentle virtues he deserved to be sought, just in the same way as the sea is not slighted on account of its (monstrous) animals and is sought on account of its pearls.

17. The subjects of that controller, behaving like the felly of a wheel did not deviate even to the width of a line from the path trodden since Manu.

18. He received taxes from the people only for their welfare, just as the sun takes up moisture to return it a thousand-fold.

19. The army was to him like his paraphernalia. The means of accomplishing his objects were only two-fold—his intellect unobstructed in the shastras and the cord stretched out on the bow.

20. The undertakings of him, whose counsel was secret, and whose features and inner-feelings were mysterious, could be inferred from their results (only), like the impressions (of deeds) of a former life.

21. He protected himself, not (because he was) afraid, practised piety even when he was not ill, amassed riches without being greedy and enjoyed pleasures without being addicted (to them).

22. There was silence in spite of knowledge, forbearance inspite of power, absence of self-praise in spite of generosity: thus his virtues (knowledge etc.) being the companions of other virtues (silence etc. of an opposite kind) appeared like real brothers.

23. Unallured by the objects of sense, a thorough master of all the sciences and devoted to piety, he was old without being (actually) aged.

24. By virtue of educating, protecting and maintaining the subjects, he was a father to them; their (real) fathers were merely the cause of their birth.

25. Of that wise man who punished culprits for (the maintenance of) order and who had married for the sake of offspring, even the riches and desires were piety only.

26. He milked (drained by the imposition of taxes) the earth for sacrificial materials; Indra milked the heavens for crops. By an exchange of their riches (resources), the two maintained the two worlds.

27. Other kings could not attain to his fame for protecting the people, for theft, having turned away from the property of others, remained in the word expressive of it.

28. A noble man although an enemy was liked by him as medicine is by a diseased person; and an ignoble man although a dear relation was discarded by him like a finger bitten by a snake.

29. Indeed, the Creater moulded him with the materials of the (five) great elements; for all his merits principally served others' ends.

30. He ruled the whole earth, governed by none else, as if, it were a single city with encircling ramparts in the form of the sea-shores and with ditches in the form of the seas.

31. He had a wife, like Daksina of Yajna, a princess of the dynasty of the king of Magadha, by name Sudaksina a name that became known by reason of her gentleness.

32. Despite his large harem, the king regarded himself as possessed of a wife by her the wise (queen) and the royal fortune.

33. The king anxious for the birth of a son from her worthy of himself, passed his time with desires with their fulfilment delayed.

34. The burdensome yoke of the government of the world, which he threw off his shoulders for the performance of a religious rite for the sake of progeny, was entrusted by him to his ministers.

35. Then the husband and wife, being purified, and having worshipped Brahma with the desire for a son, went to the hermitage of their preceptor Vasistha.

36. (They went) seated in a single chariot giving out sweet, deep sounds and thus resembled lightning and Airavata riding a cloud of the rainy season.

37. (They went) with a few (lit. limited) attendants in order that there might be no disturbance to the hermitage, but on account of their peculiar majesty, they appeared to be surrounded by an army.

38. (They went) fanned by winds which had a pleasant touch, which bore the fragrance of the juice of

Sala trees, which threw up the pollen of flowers and which gently shook the rows of forest trees.

39. (They went) listening to the heart-captivating notes which corresponded to the Sadja air and which were produced in two different ways, by the pea-cocks that looked up at the rumbling of the wheels of the chariot.

40. (They went) observing the similarity of each other's eyes in those of the couples of the deer that did not leave the path far away and that had fixed their gaze on the chariot.

41. (They went) with their faces somewhere raised to see the cranes uttering sweet, indistinct notes, and forming, as they flew in a line, a gate-way garland without any post.

42. (They went) with the (queen's) tresses and the (king's) head-dress untouched by the dust raised by the horses, on account of the agreeableness of (the direction of) the wind which augured the fulfilment of their desires.

43. (They went) smelling in the tanks the fragrance of the lotuses, which was cooled by the agitation of the ripples and which was like their own breath.

44. (They went) receiving, after the customary offerings, the unfailing benedictions of the sacrificers in villages granted by them and marked with sacrificial posts.

45. (They went) inquiring of the aged cowherds, who came to them with fresh butter, about the names of the wild trees on the way.

46. As they journeyed on in their splendid attires, there was an indescribable glory about them, just as there is at the conjunction of the constellation Chitra and the moon when freed from mist.

47. The king who was possessed of agreeable features and who was like Budha, while showing all those things to his wife, did not know the distance traversed.

48. He of unachievable fame, accompanied by the queen, reached, in the evening, with his horses tired, the hermitage of the self-controlled great sage.

49. The hermitage which was being filled by ascetics returning from another forest, habitually bringing the sacrificial sticks, the kusa grass and fruits and received back by the invisible fires.

50. The hermitage which was crowded with the deer which being accustomed to a share of the wild rice, obstructed the doors of the leaf-huts, as if they were the children of the wives of the sages.

51. The hermitage whereof the young trees were left immediately after watering by the girls of the hermits, to inspire confidence in the birds used to drink the water in the basins.

52. The hermitage wherein the cud was chewed by the deer squatted in the court-yards of the leafhuts and where in the wild rice was gathered in the evening.

53. The hermitage which was purifying the occasional visitors proceeding towards the hermitage, by means of the columns of smoke, indicative of the blazeful fires, wafted by the wind and carrying the odour of oblations.

54. Then having commanded the charioteer to stay the horses, he helped his wife to alight from the chariot and himself also got down.

55. The gentle sages with senses thoroughly restrained did honour to the worshippable Protector who was guided by polity, and to his wife.

56. At the close of the evening rites, he saw the sage (lit. the treasure of penance) with Arundhati seated behind him like the god of fire with Svaha seated behind.

57. The daughter of the king of Magadha and the king seized their feet in adoration ; and the preceptor and his wife welcomed them delightfully.

58. The Sage (Vasistha) asked the sage in the hermitage of the kingdom (Dalipa) about the welfare of

the kingdom, when his fatigue due to the joining of the chariot had been removed by the rites of hospitality.



59. The lord of riches who had conquered the cities of his enemies and who was the best of speakers, began a significant speech in the presence of that repository of the Atharvan lore.

60. Welfare in the seven departments (of my kingdom) is but proper, since you are the averter of my calamities that come from the gods and those that come from men.

61. My arrows which hit only a visible mark are, as it were, ordered back (*i. e.* rendered superfluous) by the spells of you, the author of spells, which destroy enemies from a distance.

62. O sacrificer, the oblations duly poured into fires by you become rain for the crops withering on account of drought.

63. That my subjects live a full period of man's life, and are free from fears and calamities, is due to your Brahmanical lustre.

64. Why should not my prosperity be incessant, who am thus cared for by you and who am (therefore) free from calamities.

65. But even the earth with all its seven continents, though productive of precious things, does not please me who have not seen worthy issue from this daughter-in-law of yours.

66. Indeed, the deceased fathers, forseeing the stoppage of the pinda-offerings after my death, do not eat their fill at the sraddha ceremony, being busy with the laying by (of a portion) of the food (offered to them).

67. Methinks, the water poured out by me thought to be unobtainable after my death, is drunk, warmed with their sighs, by the manes.

68. Therefore I whose soul is purified by sacrifices, but who am obscured by the absense of issue, am both shining and dark like the mountain Lokaloka.

69. Religious merit, which is the outcome of penance and charity gives happiness in the next world ; but the offspring of a pure family is for happiness here and hereafter.

70. O creator, how is it that you are not pained to see me without issue, like a young tree of the hermitage, watered out of love, by yourself, but bearing no fruit.

71. O sire, know this last debt to be a source of unbearable pain to me, as a tie-post piercing the vitals is to an elephant that has not had a bath (*i. e.* has not been washed).

72. It behoves you, O father, to arrange so that I may be released from that (debt) ; for the success of the descendants of Iksvaku in objects difficult to accomplish, depends upon you.

73. Thus requested by the king, the sage with eyes closed in meditation, stood, for a moment, like a pond with the fish asleep.

74. He whose soul was purified by means of contemplation, saw the cause of obstruction to the issue of the lord of the earth, and then informed him of it.

75. Formerly when you were returning to the earth after having waited upon Indra, there was, on your way, the Divine Cow, resting under the shade of the desire-yielding tree.

76. (Then) you did not behave well towards her who deserved circumambulation (प्रदक्षिणक्रिया), as you were thinking, for fear of the omission of a duty (to her), of this queen who had taken a bath after menstruation.

77. "Since you disregard me, you would not have issue, unless you propitiate my offspring", thus she cursed you.

78. O King, that curse was neither heard by you, nor by the charioteer as the stream of the celestial Ganges was uproarious on account of the elephants of the quarters sporting freely in it.

79. Know that (the realization of) your desire is checked on account of a disregard of her, since not paying homage to those worthy of it, obstructs one's weal.

80. For the oblations of Varuna who has entered on a long sacrifice, she now stays in the nether region the gates of which are closed with (*i. e.* guarded by) serpents.

81. Having taken the daughter of that divine cow as her representative, you, being pure, worship her along with your wife. For, when pleased, she is the yielder of desires.

82. When the habitual sacrificer (Vasistha) was saying this, the means of his oblations—the blameless cow known as Nandini returned from the forest.

83. Of a slightly rosy hue and smooth like a (fresh) leaf, she bore a mark of white hair rising on the forehead and a little curved, and thus resembled the evening (sky) bearing the new moon.

84. She with pitcher-like udder, was drenching the earth with her warm milk which was more sanctifying than a sacred bath at the end of a sacrifice (अवभृथ) and which began to flow at the sight of her calf.

85. She was effecting such purification of the king as results from a bath at a holy stream, by means of the particles of dust raised by her hoofs and touching the body of the king at a near distance.

86. The treasure of penance (Vasistha), the reader of omens, having seen her of a holy appearance, again spoke to the king, who had a title to sacrifices to be performed for him and whose prayers for his desired object were to be unfailing.

87. O king, know that the fulfilment of your desire is not distant, as the blessed (cow) appeared as soon as her name was pronounced.

88. It behoves you to live on wild products and to propitiate this cow by a constant personal attendance upon her, just as one does (acquires) knowledge by a close application.

89. You should move when she has moved, stay when she has stayed, sit when she has sat down and drink water when she has drunk it.

90. Let your wife full of devotion (to the cow), free from pollution, follow her, after she is worshipped, in the morning, as far as the penance-grove and go forth to receive her in the evening.

91. Be you devoted to her service, till she is pleased. May there be no obstacle (in your way), and may you stand, like your father, at the head of those blessed with noble sons !

92. The pupil who knew the proper time and place and was (therefore) delighted, bending low along with his wife, received the command of his preceptor with the words 'be it so.'

93. Then at night, the learned son of the Creator, the speaker of true and śweet words (Vasistha), dismissed the king of mighty splendour to go to sleep.

94. The sage who knew the proper ritual, having regard for his vow, made for him such provision as could be had in the forest, although he (the sage) had the perfection of austerities.

95. He in the company of his devoted wife, having occupied the hut of leaves pointed out by the sage, slept on a bed of kusa and passed the night whose end was anounced by the study (recitation) of his pupils.

———

## CANTO II.



1. Then at day-break, the lord of the people to whom his fame was a treasure, let loose for the forest the cow of the sage, who was made to accept garlands and odours (by him) through his wife and whose calf was tied after it had had its fill of drink.

2. The lawful wife of the king, worthy of a mention at the head of chaste women followed her (cow's) way, the dust of which had been sanctified by the stamping of her hoofs, just as Smrti (traditional literature) follows (conforms itself to) the sense of Sruti (revealed literature).

3. The compassionate king, charming by virtue of his fame, having asked his wife to return, guarded that daughter of Surbhi who excelled the four seas in the quantity of her milk and who was, as it were, the earth assuming the form of a cow and with the four oceans turned into the four teats.

4. In view of the vow, even the rest of the following was forbidden by that attendant of the cow. The protection of his body did not depend upon any one else; since the descendants of Manu were protected by their own valour.

5. The emperor (Dalipa) became devoted to her propitiation by (offering her) tasteful mouthfuls of grass, by removing the itching sensation, by keeping off flies and by allowing her to move about freely, of her own accord.

6. The king followed her like her own shadow: he stopped when she had stopped, proceeded when she had, patiently assumed the sitting posture when she had sat down and desired to drink water when she had drunk it.

7. Possessed of the royal fortune the signs of which were given up but which could be inferred from his peculiar lustre, he was like a lordly elephant with the lines of rut hidden and (therefore) inwardly intoxicated.

8. He with his bow strung, distinguishable by the hair tied into a knot with the filaments of creepers, roamed over

the forest under the pretext of the protection of the sacrificial cow of the sage, as if with the intent of taming the wicked beasts of the jungle.



9. The trees by the side of him who was equal to Varuna and who had dismissed his personal attendants, gave out a chorus of 'Victory to the king' by means of the cries of impassioned birds.

10. The young creepers wafted by the wind showered flowers on him when he passed by, refulgent like fire and adorable, as city girls shower the customary fried rice on a king (on his entry).

11. The female deer while observing the form of him who was equipped with a bow—a form which their fearless hearts declared to have intentions tender with mercy, obtained the fruit of the ample broadness of their eyes.

12. He heard his own glory sung loud in the bowers by the sylvan deities, in a manner in which the bamboos with their holes filled with wind, and (therefore) sounding, served the function of flutes.

13. The wind moistened with the spray of the mountain springs and charged with the fragrance of the gently shaken flowers of trees, fanned him who was purified by his religious performances and who was without an umbrella and (therefore) oppressed by heat.

14. When that protector entered that forest, the wild-fire ceased even without rain, there was an excellent growth of flowers and fruits, and among the beasts the strong did not oppress the weak.

15. The rays of the sun and the cow of the sage, both coppery like the tinge of a fresh leaf, after having purified the regions between the quarters by their courses began to move in the evening, towards their abode.

16. The guardian of the middle world went close after her, the means of sacrifice to the gods, the manes and guests; in the company of him esteemed by the noble

she shone like faith incarnate when attended with a religious performance.



17. He went on seeing the woods wherein the herds of pigs had emerged from the puddles, wherein the peacocks were looking up to the roosting-trees, wherein the green meadows were occupied by the deer and which (consequently) were darkening up.

18. The cow (who had only once calved), on account of the exertion of carrying the heavy udder, and the king, on account of the massiveness of his body, both decked the way back from the penance-grove with their graceful steps.

19. The queen with the row of her eye-lashes slow in winking, fondly gazed with eyes that were, as if, fasting, at that attendant of Vasistha's cow, who was returning from the forest-border.

20. Placed in front, on the way, by the king and received by going forth by the king's lawful wife, she shone between them like the twilight between the day and the night.

21. Sudaksina with the vessel of whole rice in her hands, having circumambulated that milch-cow, worshipped the broad space between her horns, which was, as it were, a door to the realization of her wish.

22. That she accepted worship, standing still, although anxious for her calf, delighted them, for the indications of gratification of beings of her kind towards their devotees bear fruit (viz. the reward of worship) presently.

23. Dalip who had exterminated his enemies by the prowess of his arms, having pressed (shampooed) the feet of the preceptor and his wife and having completed his evening prayers, again waited upon the milch-cow who had sat down after the milking was over.

24. Both the guardian (of the subjects) and his mistress of the house sat behind her near whom a lighted

lamp and offerings were placed, and slept when she had gradually gone to sleep and woke up in the morning when she had.



25. Thrice seven days passed, while he of respectable renown and devoted to relieving the distressed, observed, along with the queen, the vow for the birth of a son.

26. The next day, the sacrificial cow of the sage, desirous of ascertaining (testing) the devotion of his attendant, entered a cave of the mountain Himalaya (lit. the father of Parvati), overgrown with tender grass near the fall of the Ganges.

27. A lion, it appeared, dragged her with force—the lion whose onslaught was not noticed by the king who had directed his eyes towards the mountain-scenery, thinking that she (the cow) was unassailable even in thought by the harmful beasts.

28. Her cry prolonged by the echo arising from the cave turned away the eye of the king, the helper of the troubled,—the eye which was riveted on the mountain, by siezing it, as if, with the reins.

29. That bow-wielder saw a lion seated on the reddish cow like a full-blossomed lodhra tree on the table-land of a mountain, rich in red minerals.

30. Then the king who had a leonine gait, who afforded shelter to others and who had uprooted his enemies with force, being thus humbled, desired to draw an arrow from his quiver for the destruction of the damned lord of beasts.

31. The right hand of him who was going to strike, with its fingers held fast to the root of the arrow, the heron's feathers of which were beautified with the rays of the nails, stood, as if, with its effort of taking out the arrow drawn in a picture.

32. The king whose wrath was augmented by the paralysis of his arms, burnt within himself by the

fire of his own energy which did not harm (lit. touch) the offender standing by, like a serpent whose power is checked by means of spells and herbs.

33. The lion who had captured the cow, spoke in human accents, and thus causing astonishment to that partizan of the noble, the ensign of the line of Manu, mighty like the lion and amazed at his own condition.

34. Enough of your efforts, O king, an arrow shot at me will be of no avail ; the fury of the storm though able to uproot trees does not prevail over a mountain.

35. Know me to be a friend of Nikumbha, the servant Kumbhodara whose back is purified by the gracious act of placing the foot (thereupon) by the eight-formed god (Siva), when he desires to mount his bull white like the Kailasa mountain.

36. Do you see the yonder Devadaru tree ; it was adopted as a son by the bull-emblemed god ; it knows the flavour of the waters pouring out of the breast-like golden pitchers of the mother of Skanda.

37. Once its bark was scratched by a wild elephant, rubbing his temples. Thereupon the daughter of the mountain grieved for it as she did for Senani (her son) wounded by the missiles of the demons.

38. Ever since then, I am appointed in this cave of the mountain to scare away the wild elephants, by Siva who made me a lion to subsist on such animals as might come within my reach.

39. This feast of blood after the fast, coming (to me) at the time appointed by Siva, is sufficient for the gratification of me who am hungry, just as the ambrosia of the moon is for the enemy of the gods (Rahu).

40. Therefore do you turn back giving up shame ; you have shown your devotion to your preceptor. A charge that cannot be preserved by means of arms does not damage (when it is destroyed) the reputation of the wielders of arms.

